# धूर्तसमागमः

## ज्योतिरीशः कवीश्वरः

धूर्त-समागमः

(१)

हर्षाद् अम्भोज-जन्म-प्रभृति-दिविषदां संसदि प्रीतिमत्या स्वश्र्वामौलौ पुरारेर् दुहितृ-परिणये-साक्षतं चुम्ब्यमाने | तद्-वक्त्र-मौलि-वक्त्रे मिलितम् इति भृशं वीक्ष्य चन्द्रः सहासः दृष्ट्वा तद्-वक्त्रम् आशु स्मित-शुभग-मुखः पातु वः पञ्च-वक्त्रः ||१||

अपि च— वक्त्राम्भोरुहि-विस्मिताः स्तवकिता वक्षोरुहि-स्फारिताः श्रोणि-सीमनि गुम्फिताश् चरणयोर् अक्ष्णोः पुनर् विस्तृताः | पार्वत्याः प्रतिगात्र-चित्र-गतयस् तन्वन्तु भद्राणि वः विद्धस्यान्तिक-पुष्प-सायक-शरैर् ईशस्य दृग्-भक्तयः ||२||

नान्द्य्-अन्ते सूत्रधारः—

यद् अद्य— नाना-योध-निरुद्ध-निर्जित-सुर-त्राण-त्रसद्-वाहिनी- नृत्यद्-भीम-कबन्ध-मेलक-दलद्-भूमि-भ्रमद्-भूधरः | अस्ति श्री-नरसिंह-देव-नृपतिः कर्णाट-चूडामणिर् दृप्यत्-पार्थिव-सार्थ-मौलि-मुकुट-न्यस्ताङ्घ्रि-पङ्केरुहः ||३||

तस्योद्युक्त-भुज-प्रताप-दहन-ज्वाला-निरस्तापदो राङ्गः सर्व-गुणानिउवाद-पदवी-विद्योतनाचार्यकः | यो धीरेश्वर-वंश-मौलि-मुकुटो दातावदाताशयस् तस्य श्री-कविशेखरस्य कविता मच्-चित्तम् आलम्बते ||४||

तद् अनेन सकल-सङ्गीत-विशेष-विद्योतनाभिनव-भरतेन पुर-मथन-पदारविन्द-द्वन्द्व-वन्दारु-कर-पल्लवेन निखिल-भाषोपभाषाशुभम्भावुक-सरस्वती-कण्ठाभरणेन अनवरत-सोम-रसास्वाद-कशाय-कण्ठ-कन्दली-नरीनृत्यमान-मीमांसा-महोत्सवेन रामेश्वरस्य पौत्रेण तत्रभवतः पवित्र-कीर्तेर्धीरेश्वरस्यात्मजेन महा-शासन-श्रेणि-शिखर-भ्रामत्-पल्लवी-जन्म-भूमिना कवि-शेखराचार्य-ज्योतिर्-ईश्वरेण निज-कुतूहल-विरचितं धूर्त-समागम-नाम प्रहसनम् अभिनेतुम् आदिष्टो'स्मि | तस्य चादिष्टम् अवश्यम् इष्टं मालती-मालेव मया शिरो-धरणीयम् |

तथा हि— कर्पूरन्ति सुधा-द्रवन्ति कमलाहासन्ति हंसन्ति च प्रालेयन्ति हिमालयन्ति करकासारन्ति हारन्ति च | त्रैलोक्याङ्क्गन-रङ्ग-लङ्गिम-गति-प्रागल्भ्य-सम्भाविताः शीतांशोः किरण-च्छटा इव जयन्त्य् एतर्हि तत्-कीर्तयः ||५||

अपि च— के नार्चिता दिविषदः कति न द्विजेशाः सन्तर्पिता न कवयः कति पूजिता वा | के चार्थिनः प्रतिदिनं न कृताः कृतार्थास् त्याग-प्रसाद-पटुना कवि-शेखरेण ||६||

तत् प्रेयसीम् आहूय सङ्गीतकम् अवतरामि |

(नेपथ्याभिमुखम् अवलोक्य) आर्ये, इतस् तावत् |

(प्रविश्य) नटी : अज्ज एसम्हि | आणबेदु अज्जो | को णिओओ पसाईकरीअदुत्ति |

सूत्रधरः : आर्ये, अपि न जानासि ?

यश् चत्वारि शतानि बन्ध-घटनालङ्कार-भाञ्जि द्रुतं श्लोकानां विदधाति कौतुक-वशाद् एकाह-मात्रे कविः | ख्यातः क्ष्मा-तल-मण्डलेष्व् अपि चतुः-षष्टेः कलाया निधिः सङ्गीतागम-सागरो विजयते श्री-ज्योतिरीशः कृती ||७||

तद्-विरचितं धूर्त-समागम-नाम प्रहसनम् अभिनेतुम् आरब्धम् इति गीयतां नाट्योचितं किंचित् |

नटी (स-विनयम्) : आणबेदु अज्जो | को एत्थ पबन्धे पहाणो रसो जं उद्दिसिअ गाइस्सं |

सूत्रधारः : ननु प्रोत्फुल्ल-मालती-मकरन्द-सान्द्रामोद-मत्त-मधुकर-झङ्कार-मुखरो वसन्तः सन्ततोज्जृम्भितानङ्ग-शृङ्गार एव | तथा हि—

विकसित-नव-मल्ली-कुञ्ज-गुञ्जद्-द्विरेफः कुसुमित-सहकार-श्रेणि-निर्यत्-परागः | प्रमुदित-पिक-कण्ठ-प्रोच्छलन्-मङ्गल-श्रीर् अपहरति मुनेर् अप्य् एष चेतो वसन्तः ||८||

नटी : मलआणिल-चालिअचूअबणो कल-कण्ठि-सराहिद-कामिअणो | मअरन्द-विमत्त-सिलीमुहओ सुरहीकिद-सब्ब-दिसामुहओ ||९||

एसो वसन्त-मासो मुणि-अण-सत्थस्स रास-रहिदस्स | उम्मुलिअ गरु-धीरं करेइ मम्मह-वसं हिअअं ||१०||

दण्ड-कमण्डलु-मण्डित-हस्तः सुललित-तिलक-विभूषित-मस्तः | अयम् उपसर्पति जङ्गम-लोभश् चलत्-काशाय-पटार्पित-शोभः ||११||

अज्ज को एसो परिक्खलन्त-णिद्धोअ-कसाअ-वसणो दण्ड-कुपिण्डिआ-हत्थो धुत्तो बिअ इदो तदो विलोएन्तो दीसदि ?

सूत्रधारः : आर्ये !

यः श्रूयते जन-मुखात् तुरग-क्रियावान् आचार-धर्म-रहितो गणिका-विलासी | दीर्घोर्ध्व-पुण्ड्रक-कमण्डलु-दण्ड-लक्ष्यः पुष्णाति विश्व-नगरः किल दम्भम् उग्रम् ||१२||

तद् एतस्य दर्शनं दूरत एवाहरणीयम् |

(इति निष्क्रान्तौ |)

|| इति प्रस्तावना ||

(ततः प्रविशति यथा-निर्दिष्टः स्नातकेनानुगम्यमानो विश्वनगरः |

विश्वनगरः (स-निर्वेदः) :

हृदय-कमल-मध्ये निर्गुणो निष्प्रपञ्चस् त्रिभुवन-पतिर् एको ध्यायते योगिभिर् यः | तम् अहम् अज-रमाद्यं ज्ञान-मात्रैक-वेद्यं मधुमथनम् उदारं सन्ततं चिन्तयामि ||१३||

स्नातकः (समनाद् अवलोक्य स्वगतम्) : अहो रमणीअदा बसन्तस्स | जदो—

उन्मीलन्तं पसूणं र{इ}रस-कुसला छप्पदा बम्महन्धा कन्ता-रङ्गाणुरत्ता महुरस-भविअं साणुराअं पिबन्ति | उग्गाअन्ति प्फुरन्ता इथुअणज्झणोकामराअस्स्सकित्तिं संवित्तिं हारअन्ता पिअअणविरहे कोइला कामिणीणं ||१४||

अबि अ— जे कप्पूरं हरन्ता कमल-बण-सिरिं लोलअन्ता सहाबं साहाओ कम्पअन्ता णिहुअण-सुहआ चन्दणाणं बणाणं | ते कन्दप्पस्स मित्ता र{इ}तणुरमणी-केलिदप्पं कुणत्ता तेल्लोअंमोहअन्ता मलअसिथरिणोसीअलावान्तिबाआ ||१५||

ता कधं एसो अ{इ}दूसहो वसन्त-समओ मे एक्क-सरीरेण सहिदब्बो | (इति वैमनस्यं नाटयति |)

विश्वनगरः (स्नातकं निर्वर्ण्य) : अये दुराचार कथम् अद्य चिन्ताभार-नत-कन्धरो'न्यादृश इव दृश्यसे | तथा हि—

निःश्वासे पीवरत्वं वपुषि सुतनुता शून्यता दृष्टि-पाते वक्त्रेन्दौ धूषरत्वं गतिषु विधुरता चेतसि म्लानता च | चेष्टा नैवेक्ष्यते ते यद् अधिक-विकलं रूपम् आसादितस् त्वं तन् मन्ये पञ्च-बाणस् तिरयति भवतो धीरतां पूर्व-रूपाम् ||१६||

स्नातकः (सलज्जम् अधो-मुखः स्थित्वा) : भअवं अदिलज्जाकरं क्खु एदं | ता ण जुत्तं तुम्ह पुरदो पआसिदुं |

विश्वनगरः : न दोषः स्वरूपाख्याने | तत् कथ्यताम् |

स्नातकः (स-प्रणयम्) : भअवं अज्ज मए महा-पहादे णअर-पोक्खरिणी-परिसरे उबहसिद-सुर-णाअरी-रूब-संपत्ती अणङ्ग-सेणा णाम बार-विलासिणी विलोइदा | तदो पहुदि सब्ब-गदं तं ज्जेब पेक्खामि |

विश्वनगरः (सहस्त-तालम् उच्चैर् विहस्य) : वत्स ! अद्य मयापि तत्रैव सुरत-प्रिया नाम मासोपवासिनी दृष्टा | ताम् अनुसन्दधानो'हम् अपि मर्म-भेदिना काम-बाणेन सन्दलित एव | तथा हि—

आकाशे लिखितेव दिक्षु खचितेवाकीर्ण-रूपेव च दृक्-पक्ष्म-प्रतिबिम्बितेव मनसि श्लिष्टेव बद्धेव च | सा मच्-चित्त-सरोरुहे मधुकरीवात्यन्त-भावोत्तरा कान्ता कान्त-विलास-वास-वसतिः क्वास्तीति न ज्ञायते ||१७||

(ऊर्ध्वम् आलोक्य) वत्स ! मध्याह्नम् आरूढो भगवान् सहस्रांशुः | तथा हि—

दिक्-चक्रं मृगतृष्णया कवलितं व्योमापि भास्वत्-कर- छायाभिश् छुरितं तुषानल-कण-प्रायाश् च भूरेणवः | पान्थाः पल्वल-सङ्कुल-द्रुम-लता-कुञ्जोदरे शेरते मञ्जत्-कुञ्जर-पान-लोहित-जलाः क्षुभ्यन्ति तोयाशयाः ||१८||

(इति परिक्रामतः |)

मृताङ्गारः : भगवन्न् अस्मद्-आवासोत्तरे सुरत-प्रिया नाम मासोपवासिनी प्रतिवसति | तत्र गम्यताम् | (इत्य् अभिधाय सत्वरं परिक्रान्तः |)

विश्वनगरः : यद्य् एवं ततः समीहितम् एव नः सम्पन्नम् | तद् एहि तत्रैव गच्छाव | (इति परिक्रामतः |)

स्नातकः (अग्रतो'वलोक्य गन्धम् आघ्राय) : भो भअवं, पेक्ख पेक्ख ! विहिद-भअवन्त-जण-मुण्ड-सरिच्छ-बहुअर-महिसी-खम्भ-सोहन्त-च(उ)स्सालं इदो तदो संचरन्त-बाल-गो-बच्छ-सोहिदं पीणुत्तुङ्ग-त्थणालस-परिक्खलन्त-मन्द-संचार-रमणिज्जावास-परिसर-संचरन्त-

चेलिआ-समूहं कस्स बि महाधणस्स वासभअणं विलोईअदि | भो भो णाअरा कस्स इदं वास-भअणं ? (इति पठति |)

नेपथ्ये : लक्ष्मी-विवर्त-रस-विघ्नित-सर्व-भोगः शश्वत्-प्रकीर्ण-धन-चिन्तित-वीत-निद्रः |
अग्राह्य-नामकतया भुवि यः प्रसिद्धस् तस्यैतद् आश्रम-पदं पुरतो विभाति ||१९||

स्नातकः (अग्रतो गत्वा पुनः) : भो भो णाअरा ! कस्स इदं वास-भअणं ? (इति पठति पुनर् नेपथ्ये लक्ष्मीर् इत्य् आदि |)

विश्वनगरः : आः क एष नाम-ग्रहणे भवतो निर्बन्धः ? अथवा यद् वा तद्वास्तु श्रूयताम् | मृताङ्गार-ठक्कुरस्याश्रमो'यम् | वत्स अलं विलम्बेन | वासाभ्यन्तरं प्रविशाव | (इत्य् आवास-प्रवेशं नाटयित्वा एकान्ते स्थितौ |)

(ततः प्रविशति कश्मल-वेशो मृताङ्गारः |)

मृताङ्गारः : व्यय-शीलः कुवेरो'यं कामं याति दरिद्रताम् | अपि प्राणाः प्रदातव्या नार्थिभ्यो धनिकैर् धनम् ||२०||

स्नातकः (उपसृत्य) : भो महा-बम्हण ! भअवन्तो विस्स-णअर-चरणा तुम्हाणं गेहे भिक्खं भुञ्जिदुं इच्छन्ति |

मृताङ्गारः (स्व-गतम्) : अहो दुर्दैवम् अस्माकं यद् एतान् सकल-नगरीयाद्यलोकान् विहाय मय्य् एव पतितो धूमकेतुः | तत् कः प्रतीकारो'द्य भविष्यति ? (इति विचिन्त्य तावत् प्रकाशं स-विनयम्)
स्थाने यस्य चरन्ति भैक्ष्यम् अनघाः स्नेहेन युष्मादृशः स स्याद् अच्युत-मूर्ति-सेवन-वशाद् धन्यः पवित्रालयः | किं त्व् अस्मत्-प्रतिवेशि-विप्र-वनिता भ्रातृ-प्रसक्ताङ्गना दूती स-प्रसवेति सूतकम् अतः स्थानान्तरं गम्यताम् ||२१||

विश्वनगरः (स्व-गतम्) : अहो दुरात्मनो'स्य व्याज-व्यवहारः | भवतु वा | तत् प्रबोधयामि | (प्रकाशम्) आयुष्मन् ! पतीनाम् अस्माकं कुतः सूतक-दोषः | तथा च स्मृतिः—

न वायुः स्पर्श-दोषेण नाग्निर् दहन-कर्मणा | नापो मूत्र-पुरीषाभ्यां नान्न-दोषेण मस्करी ||२२||

मृताङ्गारः (स-विनयम्): भगवन् ! यद्यप्य् एवं तथापि न सम्भवति | पश्य—

अनावृष्ट्या कृषिर् नष्टा राष्ट्र-भङ्गाद् ऋणादिकम् | वाणिज्यम् अल्प-लाभेन प्रातराशस्य का कथा ||२३||

स्नातकः (स-क्रोधं संस्कृतम् आश्रित्य) :

स्नातकः (उपसृत्य) : धिङ् मौर्ख्यं जलधि-सुतायाः श्रियः !

नो जानाति कुलीनम् उत्तम-गुणं सत्त्वान्वितं धार्मिकं नाचार-प्रवणं न कार्य-कुशलं न प्रजयालङ्कृतम् | नीचं क्रूरम् अपेत-सत्त्व-हृदयं यस्माद् इयं सेवते तत् त्वं सानुगुणः पयोधि-सुतया लक्ष्म्या प्रमाणीकृतः ||२४||

अरे णट्ठ-परलोआ दुट्ट्ःअ-बम्हणा ईदिसे दूसह-मज्झण्हे पठमं तुमं महाधणं भेक्खिअ कुदो अणदो गदुअ अम्हेहिं भिक्खा पत्थिदब्बा |

मृताङ्गारः : भगवन्न् अस्मद्-आवासोत्तरे सुरत-प्रिया नाम मासोपवासिनी प्रतिवसति | तत्र गम्यताम् | (इत्य् अभिधाय सत्वरं परिक्रान्तः |)

विश्वनगरः : यद्य् एवं ततः समीहितम् एव नः सम्पन्नं | तद् एहि तत्रैव गच्छावः | (इति परिक्रामतः |)

स्नातकः (पुरो'वलोक्य गन्धम् आघ्राय) : भअवं, पेक्ख पेक्ख एकाङ्गिगआमुत्थम् एत्थिआ संजुत्त-महा-हन्द-कुट्ठ-परिमलुग्गारीअग्गिम-भवणादोणं सेवदि | ता एदं ज्जेव सुरतप्पिआए वास-भवणं | विश्वनगरः : विदग्धैव किल मासोपवासिनीति किंवदन्ती | तद् आगच्छोपसर्पाव | (इत्य् एकान्ते स्थितौ | ततः प्रविशति सुरतप्रिया |)

सुरतप्रिया : धम्मो ण इट्ठो बहु-दुक्ख-चेट्ठो मोक्खेण सोक्खं मम अत्थि सच्चं | अत्थो समत्थो सअलं विधादुं अणङ्ग-सब्बस्स-कलाणिहाणं ||२५||

स्नातकः (उपसृत्य) : अज्जे, विस्सणअरो तुम्हाणं अदिधी उअत्थिदो |

सुरतप्रिया (परिक्रम्यावलोक्य च) : ता उअसप्पामि | (उपसृत्य) भअवं, पणमामि |

विश्वनगरः (स-प्रमोदम्) : मद्-अभिलषित-भाजनं भूयाः |

सुरतप्रिया : भअवं, तुम्हाणं पसादेण |

विश्वनगरः : एवम् अचिराद् अस्तु |

सुरतप्रिया : आणबेदु भअवं जं मए कादब्बं दाअब्बं च |

विश्वनगरः : शुभे, किम् अदेयम् अस्माकं भवत्या ? साम्प्रतं भिक्षैव तावत् |

सुरतप्रिया : भअवं, कीदिसी भिक्खा कीदिसीए वेलाए केत्तिआइं ते अणाइं ?

विश्वनगरः (सहर्षम्) : श्रूयताम्—

मांसं माष-पटोल-तक्र-बडिका-वास्तूक-शाकं बटः सञ्जीवन्य् अथ मत्स्य-मुद्ग-विदल-प्रायः प्रकारोत्करः | स्वादिष्ठं च पयो घृतं दधि नवं रम्भा-फलं शर्करा सङ्क्षेपाद् इति साध्यतां सुवदने भिक्षा मदीया द्रुतम् ||२६||

सुरतप्रिया (विहस्य स्वगतम्) : हुं, एसो महप्पा अप्प-बिसज्जण-जोग्गो ज्जेव देव-वरस्स पसाएण संपण्णो | (प्रकाशम् अञ्जलिं बद्ध्वा)

एदं सरीरं विरहेण जुत्तं पाणा तहा धम्म-फलेक्क-सारा | सब्बं तुहाअत्तं उदार-कित्ति का बाहिरे वत्थुणि अत्थि अत्था ||२७||

ता अन्तर-घरं पविसिअ वीसमीअदु भअवं | अहं उण भिक्खा-पआरं करेमि |

स्नातकः (सोपहासं) : भअवं, पेक्ख पेक्ख ! (संस्कृतम् आश्रित्य)

पक्काः कुन्तल-राजयः कटकटाक्षामौ कपोलाव् उभाव् एतस्याः स्तन-मण्डलं निपतितं शुष्का नितम्ब-स्थली | दृक्-पात-स्मित-भाषितैः शिव शिव प्रस्तौति नेत्रोत्सवं किं ब्रूमः करवाम वेति किम् इयं दुष्टा जरत्-तापसी ||२८||

विश्वनगरः : धिङ् मूर्ख ! किम् असाधु-जनोचितं प्रलपसि ? (सुरतप्रियां प्रति) शुभे ! गम्यतां पाक-शालां प्रति | वयम् अप्य् आगच्छन्त एवास्महे |

सुरतप्रिया : जं भअवं आणबेदि | (इति निष्क्रान्ता |)

स्नातकः : भअवं ! जाव भिक्खा सिज्झदि ताव एत्थ ज्जेव भअवं टिट्ठदु | अहं उण अणङ्ग-सेणिआए प(उ)त्तिं जाणिअ लहुं आअच्छामि |

विश्वनगरः : वत्स, हैर गम्यताम् | (इत्य् उभौ परिक्रामतः |)

स्नातकः : भअवं ! मूलणास-अणाबिदस्स गेह-संणिहाणे अणङ्ग-सेणाए वास-भवणं त्ति मए सुदं | ता तस्स ज्जेव अणुसारेण अणेसम्ह |

विश्वनगरः : तद् आगच्छाग्रतः | एनाम् उपसर्पाव | (इत्य् एकान्ते स्थितौ | ततः प्रविशति अनङ्गसेना |)

स्नातकः (सहसोपसृत्य) : भअवं ! पेक्ख पेक्ख—अणङ्ग-सेनाए लावण्ण-लच्छिं |

णीलम्भोरुह-पत्तकन्त-णअणा संपुण-चन्द्राणणा उत्तुङ्ग-त्थण-भार-भङ्गुरतणू वेइव्व मज्झे किसा | बाला मत्त-ग(इ)न्द-मन्द-गमणा सुन्देर-सोहामई णूणं पञ्च-सरस्स मोहण-लआ सिङ्गार-संजीवणी ||२९||

विश्वनगरः (स्वगतम्) :

यन् नेत्राञ्जन-भङ्गि-लङ्गिम-मय-स्मेराननाम्भोरुहा यत् साकूत-कला-विलास-वसतिर् यत् कान्त-रोमोद्गमा | मद्-गावेङ्गित-सङ्गतिं तनु-लताम् आलोक्य गोपायति प्रायस् तत् कतह्यत्य् अनङ्ग-रचनाम् अङ्गे कृशाङ्गी स्थिताम् ||३०||

(प्रकाशम्) सम्यग् उपलक्षितम् | तथा हि—

यत् तीर्थाम्बु मुखाम्बुजासवरसो नेत्रे नवेन्दीवरे दन्त-श्रेणि-नखास् तताक्षत-चयो दूर्वा च रोमावली | उत्तुङ्गं च कुच-द्वयं फल-युगं पत्रं कराम्भोरुहं तन् मन्ये मदनार्चनाहित-मतिः स्वाङ्गोपहारैर् इयम् ||३१||

(अनङ्गसेनां लक्ष्यीकृत्य)

यत् पूर्वं रचितं तपः प्रतिदिनं या तीर्थ-यात्रा कृता यद् भूम्ना पुरुषोत्तमार्चन-विधौ चेतः कृतार्थीकृतं | तस्यैतत् परम-प्रमोद-जनकं प्राप्तं फलं कर्मणस् तत् किं शास्त्र-कथा-रसेन किम् अहो स्वर्गेण मोक्षेण वा ||३२||

(इति कायावस्थां नाटयति |)

स्नातकः (सहर्षं स्वगतं) : एसो लम्पडो उन्दुरु-विअरे सप्प्पो बिअ प(इ)ट्ठो | भोदु, जुत्ति-पहाणेहिं वअणेहिं णिवार(इ)स्सं | (प्रकाशम्) भगवं तुमं उपेक्खिद-संसार-सोक्खो मोक्खेक्क-पराअणो कधं एसारिसे मअतिण्हा-सरिसे मअण-रसे पलिअ अप्पाअणं वावादेसि ? णिअत्तीअदु इमादो दुट्ठ-गणिआ-पसङ्गादो त्ति |

विश्वनगरः (स्वगतं) : वत्स, नैवं पश्यसि—

यावद् दृष्टिर् मृगाक्षीणां न नरीनर्ति भङ्गुरा | तावज् ज्ञानवतां चित्ते विवेकः कुरुते पदम् ||३३||

अनङ्गसेना (विहस्य) : भगवं धणाधीणो क्खु अअं जणो | एत्थ अरणरुदिअं कदुअ अप्पाणअं विडम्बेसि |

विश्वनगरः : संन्यासिनाम् अस्माकं कुतोऽर्थ-सम्पत्तिः ? तद् अस्मच्-छरीरेण यथा-सुखं विनियोगः क्रियताम् | (सानुरागम्)

बाले मृणाल-दल-कोमल-बाहु-दण्डे चण्डि प्रचण्ड-वदने मयि देहि दृष्टिम् | एष त्वदीय-वदनाम्बुज-कृष्ट-चेता दीनो यतिः सपदि मज्जति काम-सिन्धौ ||३४||

स्नातकः : भो भगवं ! तुमं उपेक्खिद-संसार-सोक्खो (इत्य् आदि पठति |)

अनङ्गसेना (संस्कृतम् आश्रित्य) : भगवन्न् अलम् अत्रात्यन्तानुसन्धानेन !

वाग्-अर्थं परिहृत्य मोक्ष-पदवीं ध्यायन्ति निर्मत्सराः शान्त-प्रौढ-कुलीन-हीन-विषये सर्वत्र साधारणाः | राग-द्वेष-समत्व-कर्षित-धियो वेश्याः सुरा भिक्षवो वस्तुं नन्व् अपि नित्यम् इत्य् अहह किं कामार्णवे मज्जति ||३५||

विश्वनगरः : प्रिये, गृहाणास्मच्-छरीरम् | (इत्य् अञ्चले धारयति |)

स्नातकः (सहसोपसृत्य) : अरे णट्ठ-परलोआ दुट्ठ-परिब्बाअआ एसा पठमं अम्ह-परिग्गहेण तुह पुत्त-वहू होदि | ता मुञ्च एणं |

विश्वनगरः : धिङ् मूर्ख ! एषास्मद्-वधूस् त्वद्-गुरु-पत्नी मातृ-तुल्या च | तत् किम् एनाम् अनुबध्नासि ?

स्नातकः (स-क्रोधं) : अरे रे लम्पडा ! एवं एवं भणन्तस्स दण्ड-प्पहारेण पक्क-मालूर-फलं बिअ मुण्डं दे थत्थरं कर(इ)स्सं | (इत्य् अन्योन्यं कलहं कुरुतः |)

अनङ्गसेना (स्वगतं) : कधं धुत्त-हत्थ-पलिदम्हि | बोदु एवं ताव | (प्रकाशम्) भो महा-भाअधेआ ! तुम्हाणं एआरिसे महा-विवादे असज्जाइमिस्सो पमाणीकरीअदु | (इति ग्रन्थिं दर्शयति |)

विश्वनगरः : अलं ग्रन्थि-दर्शनेन ! आगच्छतं तत्रैव गच्छामः | (इति निष्क्रान्ताः सर्वे |)

इति प्रथमाहः-सन्धिः |

—ओ)०(ओ—

(२)

(ततः प्रविशति असज्जातिमिश्रो विदूषकश् च |)

असज्जाति-मिश्रः (स-प्रमोदनं) :

त्रैलोक्य-भोजनं श्रेष्ठं ततो'पि सुरतोत्सवः | भोजनं वास्तु वा नास्तु जीवनं सुरतं विना ||१||

वत्स, बन्धु-वञ्चक आगच्छाधीष्व |

विदूषकः : जं आणबेदि |

असज्जाति-मिश्रः :

यद् रामा-वक्त्र-प्नं यद् अलस-नयनालोकनं केलि-रङ्गे यः स्याद् अप्य् अङ्ग-सङ्गः कुच-कलसम् उत्पीडने बाहु-भङ्गिः | एतत् संसार-सारं कुरु निज-हृदये निर्विकल्पैक-कल्पं किं ते कार्यं विवाद-क्वथित-ऋजु-मति-ग्रन्थ-कन्थाभरेण ||२||

विदूषकः : भो मिस्स, पराङ्गणा-सम्भोगादो पि पर-मन्दिरे सन्धिं कदुअ जं अत्थो अबहरीअदि तं ज्जेव तिहुअण-सारं | पेक्ख पेक्ख—

किं बाणिज्जेण कज्जं णिअधण-विलअं तं क्खु काऊण दुक्खं किं वा कज्जं किसीए पसु-वसु-णिअमाआस-णिक्कज्जादाए | किं विज्जाए फलं वा मरण-समसमुप्पण-चिन्ताउलाए एक्कं तेल्लोअसारं पर-धण-हरणं जूअ-कीला-सुहं च ||३||

ता एत्थ धुत्त-उरणअरे जादिसो तुमं गुरू तादिसो अहं सिस्सो संवुत्तो |

असज्जाति-मिश्रः : अहो अस्मिन् नगरे निरुपधि-जीवनतास्मद्-विध-श्रोत्रियाणाम् | दिनाष्टतयाद् आरभ्य न कश्चिन् न्याय-वादी न कपट-श्राद्ध-प्रतिलम्भो न च गणिकालापः |

नेपथ्ये : विज्ञाप्यतां मिश्रस्य स्थाने न्याय-करणार्थं वादिनौ द्वारि वर्तेते |

असज्जाति-मिश्रः : वत्स बन्धुवञ्चक, प्रवेशय वादिनौ |

(विदूषको निष्क्रम्य विश्वनगर-स्नातकानङ्गसेनाभिः सह पुनः प्रविशति |)

असज्जाति-मिश्रः (विश्वनगर-स्नातकौ निरीक्ष्य स्वगतं) : कथम् अनर्थान्तरम् आपतितम् ? (प्रकाशम्) भगवन्न् आगन्तुका वयम् | तन् नात्र भिक्षावसरः |

विदूषकः : भो मिस्स एदे ज्जेव वादिणो | एदाणं विवादं विचारेदु मिस्सो |

असज्जाति-मिश्रः (स-हर्षं स-गौरवं च) : आसनम् उपनीयतां भगवते स्नातकाय च |

(विदूषकस् तथा कृत्वा सर्वान् उपवेशयति |)

असज्जाति-मिश्रः : को'र्थी, कः प्रत्यर्थी ?

स्नातकः : भासाए अहं अत्थी णिअर-करेण भगवं |

असज्जाति-मिश्रः : न्याय-वादिनः प्रथमतो निकरः पश्चाद् भाषोत्तरे |

विश्वनगरः : अयम् अस्मत्-संन्यास-दण्डो निकरः |

स्नातकः : एदं मे इन्दासण-कोल्लिअं णिअअर-करणे पविणीअदु |

असज्जाति-मिश्रः (स-गौरवं गृहीत्वा स-प्रमोदम् आघ्राय) : किञ्चिद् विनियुज्यते |

निद्राकरं दोष-विनाश-हेतुः क्षुधाकरं बुद्धि-विकाशकं च | इन्द्राशनं काम-बलानुकूलं लब्धं मया दैव-वशाद् इदानीम् ||४||

विश्वनगरः : स्वाधीन-यौवना सुभृऊः सा मान्या सर्व-कामिनाम् | अस्माभिर् इयम् आक्रान्ता मदीया तेन वल्लभा ||५||

असज्जाति-मिश्रः (भाषां भूमौ लिखित्वा स्नातकं प्रति) : स्नातक, सत्वरम् उत्तरं कुरु |

स्नातकः : एसा पुब्बं मए दिट्ठा दाऊण दस-टङ्कआ | आणीदा अ मर्दिं दाइं मदीआ तेन वल्लहा ||६||

असज्जातिमिश्रः : उत्तरम् अभिलिख |

विदूषकः : भो मिस्स ! पेक्ख पेक्ख ! अणङ्गसेणाए लाबण्ण-लच्छिं !

मअलञ्छण-बिम्ब-फुरन्त-मुही णअणुप्पलचञ्चलकेलिणिही | थण-भार-णआ अ(इ)मज्झकिसा पठमोदिअचन्दकला-सरिसा ||७||

असज्जातिमिश्रः : अहो निर्माण-वैदग्धी विधातुः ! तथा हि—

नीलोल्लसल्-ललित-खञ्जन-मञ्जु-नेत्रा सम्पूर्ण-शारद-कला-निधि-कान्त-वक्त्रा | बाला जगत्-त्रितय-मोहन-दिव्य-मूर्तिर् मन्ये विभाति जगति स्मर-धीर-कीर्तिः ||८||

भो वादिनौ ! एषा विवादाध्यासितानङ्गसेना जय-पराजयं यावत् मध्यस्थ-स्थाने स्थाप्यताम् | एवं-विधे च माध्यस्थ्ये वयम् एव नृपति-व्यवस्थिता मध्यस्थाः |

(अनङ्गसेनाम् आनीय स्व-संनिधाव् उपवेश्य तदीय-करं हृदये निधाय स-प्रमोदम्)

विकच-कमल-कोष-श्रीर् इयं काम्य-भूतिर् हिमकर-कर-जाताच् चन्द्रकान्ताद् धि शीतः | मृगमद-घनसारआसङ्ग-सौरभ्य-भव्यो हरति मदन-तापं कोमलः पाणिर् अस्याः ||९||

(क्षणं विचार्य उच्चैर् विहस्य) भो वादिनौ ! एतद् राज्य-क्षेत्रे भुजङ्गयोर् इव युवयोर् विवादः | तथा हि—

नैषा त्वदीया भवतो’पि नेयं मत्-संनिधिष्ठा सुभगा मदीया | स्वप्ने’पि पूर्वं मयि जात-केलिस् ततो’पि हेतोः खलु वल्लभा मे ||१०||

विदूषकः (अनङ्गसेनाम् आलोक्य जनान्तिकम्) : भो सुन्दरि ! एसो मिस्सो बुद्धो भअवं णिद्धणो सिणादओ इच्छारअणो | ता एदाणं समागमं परिहरिअ अम्ह-समागमेण तुह जोब्बणं सफलं भोदु |

(इत्य् आत्मानं दर्शयति |)

अनङ्गसेना (स-स्मितम्) : एदं धुत्त-समागम-पहसणं संबुत्तं |

विश्वनगरः (स-वैराग्यम्) : वत्स दुराचार, न हि जलौकसाम् अङ्गे जलौका लगति | मूलनासस्यायं विचारः | तद् एहि सुरतप्रियाया एव भवनं गच्छाव | (इति निष्क्रान्तौ | ततः प्रविशति अपटी-क्षेपेण मूलनाशकः |)

मूलनाशकः : अले अले ! अणङ्गशेणिए जाणिदे तुम्ह चलिदं जं वालं वालं कअमअण-मन्दिल-क्खौल-वेदणं पत्थन्ते बहु-वालं हग्गे तए पआशिदे | ता शंपदं पअच्छ | अणधा लाअदोहाइं दाव दाइश्शं |

अनङ्गसेना : मूल-नासअ, संपदं ज्जेव असज्जाइ-मिस्सादो तुह दाइस्सं | ता सुत्थो होहि |

विदूषकः : को एसो दुट्ठ-दंसणो दुट्ठ-चरिदो दुट्ठ-वसणो ?

असज्जातिमिश्रः : एष किं भगवद्-अगोचरः ? पश्य—

छिन्नौष्टनासो गल-गण्ड-नम्रो वामाक्षिकाणो गलितैक-हस्तः | शिलीपद-व्यापृत-दक्षिणाङ्घ्रिः स मूलनाशः किल नापितोऽसौ ||११||

(मूलनाशकः सहसोपसृत्य सर्वेषां स-प्रमाणम् आदर्शं दर्शयति |)

असज्जातिमिश्रः : मूलनाशक ! क्रियताम् अस्माकं नख-लोम्नां परिष्कारः |

मूल-नाशकः : पठमं वेदनं पअच्छ |

असज्जातिमिश्रः : मूलनाशक, किम् अर्थं ?

मूल-नाशकः : भो, जदि तुमं पलिक्खलन्ते पठमं ज्जेव मलिश्शशि ता वेदनं किण प(इ)च्छिदव्वं |

असज्जातिमिश्रः : अलं परिहासेन ! गृह्यताम् इदं पारितोषिकम् |

(इति कौलिकाद् आकृष्य गञ्जाकिनीं ददाति | मूलनाशकः स-गौरवं गृहीत्वा स-प्रमोदं आघ्राय किंचिद् विनियुज्य च मिश्रस्य कर-चरणयोर् बन्धनं कृत्वा व्यापारं नाटयति |)

असज्जातिमिश्रः (स-वेदनम्) :

दलति हृदयम् एतन् मोहम् अभ्येति चेतः स्फुटति सकल-देहे कीकस-ग्रन्थि-सन्धिः | विरम विरम शिल्पान् मूलनाश त्वम् अस्मात् शिव शिव शिव सद्यो जीवनं कुप्यतीव ||१२||

मूल-नाशकः (चालयित्वा) : कधं मलिदे अशज्जाइमिश्शे ? लहू लहू अबकमिश्शं | (इति निष्क्रान्तः |)

विदूषकः (मिश्रस्य कर-चरणयोर् बन्धनम् अपनीय) : भो आणबेदु मिस्सो अबरं हु तुह पिअं णिव्वाह(इ)स्सं |

असज्जातिमिश्रः (संज्ञां लब्ध्वा) :

राष्ट्रं समस्तं कपटेन भुक्तं धूर्त-क्रियाभिर् दयितेयम् आप्ता | भवान् विनीतो मिलितश् च शिष्यः नातः परं नः प्रियम् अस्ति लोके ||१३||

तथापीदम् अस्तु—

काले सन्तत-वर्षीणो जल-मुचः शस्यैः समृद्धा धरा भूपाला निज-धर्म-पालन-परा विप्रास् त्रयी-निर्भराः | स्वादु-क्षीर-नतोधसः प्रतिदिनं गावो निरस्तापदः सन्तः शान्ति-परा भवन्तु कृतिनः सौजन्य-भाजो जनाः ||१४||

(इति निष्क्रान्ताः सर्वे |)

इति कवि-शेखराचार्य-ज्योतिरीश्वर-विरचितं धूर्त-समागमं नाम प्रहसनं समाप्तम् ||